# पारिशिक्षा

प्रणिपत्य जगन्नाथं वासुदेवं सनातनम्
गणाधिपं गिरां देवीं शिक्षां वक्ष्ये यथामति

अथवर्णसमाम्नाय उच्यते याजुषोऽत्र तु
स्वराः स्पर्शास्तथान्तस्थाः ऊष्माणश्चाथ दर्शिताः
विसर्गानुस्वारळाश्चानुनासिक्याः पञ्चचोदिताः

ह्रस्वदीर्घप्लुतावर्णे वर्णो वर्णा ऋ ॠ ऌ च
एदैदोदौदितिज्ञेयाः षोडशोहादितःस्वराः

कखौ गघौ ङ च छ ज झ ञौ टठ ड ढाणतौ
यदौदधौ पफबभौमस्पर्शाः पञ्चविंशतिः

यरौ लवौ चतस्रोऽन्तस्थाश्च ःकःशषसःपहाः
षडूष्माणो विसर्गोऽनुस्वारो लोनास्य पञ्चकम्
आदितो नववर्णाः स्युः समानाक्षरका इह
अन्वर्थत्वं महासंज्ञा व्यञ्जन्त्यर्थान्तराणि च
पूर्वा चार्यैरतस्तां तु सूत्रकारेण चाश्रिताः

ह्रस्वदीर्घे सवर्णे स्तो द्वे द्वे न प्लुतपूर्वकम्
स्वराःषोडश तस्यादौ शेषो व्यञ्जनसंज्ञकाः
यःस्वयं राजते तं तु स्वरमाहपतञ्जलिः
उपरिस्थायिना केतेन व्यङ्ग्यं व्यञ्जनमुच्यते

स्पर्शाः स्युर्व्यञ्जनेष्वाद्याः पञ्चविंशतिरीरिताः
पराश्चतस्रस्त्वन्नस्थाः षडूष्माणस्तः परे
प्रथमाद्याः क्रमात्संज्ञा उत्तमः पञ्चमस्य तु
पूर्वागमो ह्यत्र भवेद्द्वितीयचतुर्थयोश्चैव यथा क्रमेण
ये ते त्रयस्तत्प्रथमं तृतीयं स्यादुत्तमा सतिचानुपूर्व्यात्  इत्यादि

विसर्गोष्ठद्वितीयाः स्युरघोषाः प्रथमा नहः
वर्णोत्तरस्त्रयाणां स्याद्ध्रस्वोऽकारो ह्ययं भवेत्
ऋकारल्कारौ तौ ह्रस्वावनुस्वारोऽदिदुत्तथा
वर्गोत्तरस्तु वर्गाख्या प्रथमो भवतीत्यपि
इति परिभाषाप्रकरणं समाप्तम्

अथ वक्ष्ये वर्णसारभूतवर्णक्रमस्य च
शुद्धवर्णक्रमादीनां चतुर्णामपि लक्षणम्
तत्रादौ वर्णसारस्य प्रकारः सम्यगुच्यते
ध्वनिःस्थानं च करणं प्रयत्नो देवता ततः
जाति रङ्गं वर्णसंज्ञा व्यञ्जनानां विधीयते

अचामेवं प्रोच्यमाना ध्वन्यादौ च यथाक्रमम्
प्रयत्नदेवयोर्मध्ये मात्राकालः प्रकीर्तितः

अचां हलां केवलानां मङ्गं न परिकीर्तयेत्
उदात्तादिस्वराणां तु ध्वन्यादीन् परिवर्जयेत्
तथापि देवता जाति गुणो रेखादिदर्शनम्

अध्येत्रङ्गाद्यवस्थां च षड्जातिस्वरकारणम्
सोत्पत्तिस्थानकं चैव स्वसंज्ञानां चानुपूर्व्यशः

ये धर्माः शुद्धवर्णे तु शास्त्रोक्ता इह तानपि
संयोज्य तत्र तत्रैव भक्तिरङ्गादिकान् वदेत्
व्यञ्जनस्याष्टधा धर्मः स्वरस्यैव तथाष्टधा
तीचोच्चादिस्वराणां तु दशधर्माः प्रकीर्तिताः
व्यञ्जनोच्चादिसंयुक्त स्वरस्यैकस्य वै पुनः
षड्विंशतिरीरिताधर्माः क इत्येष उदाहृतः
इमंबुधावर्णसारभूतवर्णक्रमं विदुः २७

मनः कायाग्निमाहन्ति सप्रेरयति मारुतम्
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्

प्रातिश्रुत्कानि तस्यात्र भवत्येतानि पञ्च च
उरःकराठः शीर्षमुखं नासिकाया बिलद्वयम्

नादस्य संवृते कराठे श्वासस्तु विवृते सति
हकारः क्रियते मध्ये वर्णप्रकृतयश्च ताः

सभूयान् प्रथमान्येषु ह्येतानेव विदुर्ध्वनीन्
प्रथमान्येष्वघोषेषु महाप्राणा उदाहृताः
अल्पप्राणास्तु प्रथमवर्णेष्वेव प्रकीर्तिताः इति

कार्य ओष्ठोपसंहार उवर्णोऽत्रविशेषकः
एकान्तरस्यकर्तव्यः प्रकृतान्नार्धमध्यकः ३२

पृथगोष्ठोपसंहारो नार्धमात्रान्तरे भवेत्
एकमात्रान्तरंत्वस्य स्यात्तु सर्वत्र संभवे

बर्स्वेष्वादौ तु जिह्वाग्रमुपसंहरति त्रिके
हनूपसंहृततरे स्यातामोष्ठो वकारवत्

एकारं पूर्ववत्तालौ जिह्वामध्यमिवर्णवत्
करणं स्थानमेदेतोर्युदैदौतोः क्रमेण तत्
ऐकारौकारयोरादि रकारार्धमितीरितम्
अनुनासिकधर्माः स्युरनुस्वारोन्तमा अपि
अचां यत्रोपसंहारः तत्स्थानं क्रियतेऽत्र तु
स्वराणां करणं विद्यादुपसंहरतीति यत्

व्यञ्जनानां तु तत्स्थानं स्पर्शनं क्रियते यदा
करणं तच्छलां ज्ञेयं स्पर्शयत्यत्र येन तु

हनूमूले कवर्गे तु जिह्वामूलेन वै तथा
कण्ठं स्थानं स एवात्र करणं ह विसर्गयोः
स्पर्शयत्यथ तालौ च वर्गे जिह्वान्तरेण तु
प्रतिवेष्ट्य टवर्गे तु जिह्वाग्रेणैव मूर्धनि
दन्तमूलेष्वधोभागे जिह्वाग्रेण तवर्गके
उत्तरोष्टेऽधरोष्ठेन पवर्गे स्पर्शयत्यथ
तालौ यकारे वै जिह्वामध्यान्ताभ्यां तथैव च
रेफे जिह्वाग्रमध्येन दन्तमूलोत्तरेषु ले
ओष्ठान्ताभ्यां वकारे तूत्तरदन्ताग्रकेषु च
ऊष्माण आनुपूर्व्येण स्पर्शस्थानेषु पञ्च च
तेषां करणमध्यं तु विवृतं भवतीह तत्
कण्ठं स्थानं स एवात्र कारणं हविसर्गयोः
उरस्यत्वं हकारे तूत्तमान्तं थपारे सति
हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम्
उरस्यन्तं विजानीयात्कण्ठमाहुरसंयुतम्

स्थानयोगे भवत्यत्र वर्गवच्चेति तेषु तु
स्पर्शानां स्पृष्टतां विद्यादन्तस्थास्वीषदीरितम्
यद्यग्निभूचन्द्रदिवाकराश्च वेदाक्षराणामधिदेवताः स्युः
अवर्णवर्गादि धषैत्समीराइदै द्वितीयेन्द्रसवह्निसंज्ञाः
भौमा उवर्णे हल ओत्तृतीयश्चन्द्रा ऋ वर्णो प इ औच्चतुर्थः

सौर्या लृकारोत्तमशास्तथैवं पञ्चाशदर्णा ऋषिभिस्सुगीताः
ब्राह्मास्तुवर्ण प्रथमा स्वराश्च क्षात्रास्तथा द्वित्रितुरीयवर्णाः
वैश्यायकारादि चतुस्तथोत्तमाः
शूद्रा अनुस्वारविसर्वा ऊष्मा

यद्व्यञ्जनं तद्व्रजते स्वराङ्गं तदङ्गभूतं तु परस्वराङ्गम्
पूर्वस्वराङ्गं त्ववसानवर्ति भवेत्परायुक्तमसंन्युतोनः
योगाद्व्यनुस्वारविसर्ग भक्तयोरेफस्त्वृकारे परतस्तथास्यात्

अच्पूर्वकं व्यञ्जनमेति हल्परं स्पर्शो द्विवर्णमिति द्वित्वे कृते
यत्रासवर्णं तु परस्वरस्यान्तस्थोदयं व्यञ्जनमङ्गमेव
पूर्वस्वराङ्गं न भवेद्य ऊष्मणः स्पर्शो यदि स्याद्विकृतिस्तथापि
भक्तिः पराङ्गं प्रचयात्परास्यात् तथाधृते सत्यृपरे च रेफः
यत्रासवर्णं तु परस्वरस्यान्तस्थोदयं व्यञ्जनमङ्गमेव
परे सति ह्यूष्मणि वै पराङ्गे स्पर्शो यमाश्चैव परस्वराङ्गम्
अचः स्वराः स्पर्श हलावघोषान्तस्थोष्मघोषव्यञ्जनमुत्तमाद्याः
तथैव वर्ग प्रथमादिह्रस्वदीर्घप्लुताद्या इति वर्णसंज्ञाः

ह्रस्वश्च यावद्विपिने स्वभावात्
किकीदवी रौति स एकमात्रः
काकोऽब्रवीत्ताद्विगुणं तु कालं
द्विमात्रकः स्यात्तु स एव दीर्घः

शिखी त्रिमात्रं वदति प्लुतः स्याद्
ध्रस्वार्धकालं न कुलोऽर्थमात्रम्
उच्चस्य भूमिर्निहतस्य चाग्निः
स्वारस्य चन्द्रः प्रचयस्य चार्कः
नीचो विराड्ब्राह्मणजातिरुच्च-
स्वारस्तु वैश्यः प्रचयश्च शूद्रः

स्वारोच्चकौ राजससात्विकौ स्तः
धृतानुदात्तावपि तामसौ
विनिर्दिशेत्तर्जनिमध्य पर्व-
एयुच्चं च नीचं तु कनिष्ठिकादौ
अनामिकान्त्ये स्वरितं च निर्दिशेत्
तं मध्यमायाः प्रचयं च मध्यमे

तदङ्गुलीस्थानमुदात्तकादिः
स्वारं यदि ह्युच्चमिवोर्ध्वकं च -

ह्यनामिकामध्यमकान्त्ययोश्च
तौ स्वारकम्पे स्वरितानुदात्ता-
वनामिकान्त्यदिमरेखयोश्च
उदात्तनीचौ क्रमशः प्रदेशिनी
मध्याद्ययोर्निर्दिशदुच्चकम्पे
गोधेनुकर्णा कृति दक्षहस्ते-
ह्यङ्गुष्ठकाग्रेण विदर्शयेज्ज्ञः
स्वरेषु हस्ते च मनश्च दृष्टिं
क्रमान्निवेश्यात्र नियोजयेत्तत्

हस्तेन वेदं य इमं त्वधीते
वर्णस्वरार्थाननुचिन्तयन् सन्
स ऋग्यजुस्सामभिरेव पूतः
तद्ब्रह्मलोके सततं महीयते

यद्गात्रदैर्घ्यं दृढताचया ध्वनेः
तथाणुताकण्ठबिलस्य या च
एतानिकुर्वन्ति च शब्दमुच्चै-
र्यर्धस्वतासात्रदुतास्वरस्य

याविस्तृता कण्ठविलस्य चैताः
कराणि शब्दं निहतं च नित्यम्
गान्धारको मध्यम उच्चजातः
षड्जर्षभौ द्वौ निहतोद्भवौ स्तः
स पञ्चमो धैवतकोनिषादः
त्रयःस्वराश्च स्वरितान्तुजाताः

तत्रापि नित्यो निहतश्च तेऽत्र
क्षैप्रो निपादस्वरहेतवः स्युः
प्रश्लिष्ट क प्रातिहताभिधानौ

स्यातां तथापञ्चमकारणे तौ
तथान्तमस्वारक पादवृत्तौ
स्यातां तथा धैवतहेतुभूतौ
गान्धारकस्याप्यथ मध्यकस्य
क्रमादुदात्तप्रचयावपि क्रमात्
अथानुदात्तौ यदि दीर्घह्रस्वौ
हेतू च षड्जर्षभयोः क्रमेण
उरश्च कण्टं दशनांश्च तालु
जिह्वां च नासां युगपच्च संस्पृशन्
तेभ्यो हि यस्मात् स्वर एष जायते
षड्भ्यस्ततः षड्ज इतीह चोच्यते

नाभेः सकाशाल्लघुवात उत्थितः
कण्ठोत्तमाङ्गेन समाहतः सन्
यस्मान दत्यार्षभवत्सनीचः
स्वरेण तस्मादृषभः स्मृतः स्यात्

गौरुच्चवान् धारयतीति तां वै
गन्धेत्य जासेति च रौति वा स्यात्
मध्यस्थितत्वादपि तत्स्वराणां
समध्यमस्वारकनीचयोश्च
अभ्युत्थितो वायुरुरः प्रदेश-
हृत्कण्ठमूर्धश्रुतिमूलकेषु
पञ्चप्रतीकेषु चरंश्च कण्ठा-
दुत्तिष्ठते पञ्चम इत्यतः स्यात्

षड्जादिसप्तस्वपि मध्यमत्वात्
केकीपि कैः पञ्च त इत्यतोवा
यस्मात् स्वरान्तेन विशेषतोऽभि-
सन्धीयते स्वर्यत एष धैवतः

तानप्रधानत्वबला ल्ललाट-
प्रान्ते सपश्चाद्व्यवतिष्ठतीति

अस्मिन्निषीदन्त्यच इत्यनेन
निषाद इत्युक्तमतः स पश्चात्
व्याप्यावतिष्ठत्यखिलं च सन्धि-
प्रदेशमैभध्वनितुल्यरूपः

प्रथममुदितशब्दः श्रूयते ह्रस्वमात्रः
श्रुतिरिति विदुरेनं सास्वराङ्गप्रधाना
विविधभरतविद्भिः प्रोच्यते तत्स्वराणां
सरिगमपधनीति ह्यत्र संज्ञा मुनीन्द्रैः

ज्ञेयानुदात्तो हृदि मूर्ध्न्युदात्तः
स्यात्कर्णमूले स्वरितं तु विद्यात्
सर्वप्रतीके प्रचयः स्मृतः स्यात्
स्थानं स्वराणामिदमेव नान्यत्

सारस्त्वमाहार उदात्त उच्चैः
भवेद्धि नीचैरनुदात्त एव
स्वारस्तदन्त्यो निहतोऽणुमात्रः
पूर्वोच्चकोऽयं स्वरितस्वरः स्यात् इत्यादि

ते संहितायां स्वरितात्परे स्यु-
रेकोऽथवा द्वौ बहवोऽनुदात्ताः
पदस्थिता ये प्रचयस्वरात्मकं
गुणं भजन्त्यत्र स उच्चकश्रुतिः

इवर्णको तोर्यवकार भावे
यः स्वर्यते त्वैप्र उदात्तयोः स्यात्
स्थिते पदे यत्र तु नीचपूर्वे

व्यपूर्वके वायवपूर्वमक्षरम्
यत्स्वर्यते तत्स्वरितं तु नित्य
एवेति विद्यान्न यथा क्रमोऽत्र

नानापदस्थेऽपि च सांहितेन
यःस्वर्यते प्रातिहतः स उच्चैः
लुप्ते पृथग्भूत पदस्थितोच्चात्
परेऽनुदात्ते यदि तर्ह्यकारे
पूर्वोच्चको यं स्वरितस्वरः स्या-
न्नाम्ना भवेत्सोऽभिहतश्च पश्चात्

उच्चादुकारादनुदात्तधर्म
उकार उर्ध्वे सति सन्धितोऽत्र
ऊभाव एष स्वरितश्च तत्र
प्रश्लिष्ट इत्युच्यत एव सद्भिः

या स्यात्समाने तु पदे विवृत्ति-
स्तस्याः परे यः स्वरितश्च लब्धः
स पादवृत्ताह्वय एव नान्यः
एतद्विवृत्तेरपि चार्धमात्रः

पदे समाने य उदात्तपूर्वै
स्तैरो ऽथो व्यञ्जन उत्तरस्सः
क्षेप्रे च नित्येऽतिदृढः प्रयत्नो
दृढोऽतिपूर्वोऽभिहते प्रयत्नौ

प्रश्लिष्टके प्रातिहते च कार्यः-
स्वारे तथैवातिमृदुः प्रयत्नः
स्यात्पादवृत्ते खलु सपृमे च
स्वारे भवेदल्पतरः प्रयत्नः

प्रश्लिष्टनित्याभिहताश्च यत्र
क्षैप्रस्तथोच्चस्वरितोदयाः स्युः
तत्र प्रकम्प्यन्त इमे हि सन्धौ
पूर्वस्वरान्ते निहतं च कुर्यात्

सकम्प एवात्र यथा हि दीर्घं
तथोच्चरेद्ध्रस्वमपि प्रकम्पे
स्वरिते परभूते च स्वरितस्योत्तरार्धकम्
नीचं कुर्यात्सकम्पः स्याद्यथा दीर्घं समुच्चरेत्  इति

कम्पो द्विधा स्वार उदात्तकश्च
स्वाराख्यकम्पास्त्विह संहितायाम्
शाखान्तरेष्वेव उदात्तकम्पाः
पुनर्द्विधातौ खलु ह्रस्वदीर्घौ

तस्यादितः स त्र्यणुमात्रकाल
स्वारस्तदन्त्ये निहतोऽणुमात्रः
उच्चस्तथा सत्र्यणुमात्र आदौ
तस्यान्त्यभागेऽप्यणुमात्रनीचः

संमेलने चैव तयोर्द्विमात्रः
स एव कम्पस्वरितोच्चयोश्च
क्षैप्रस्यकम्पस्तु चतुर्भिरादू-
देदैद्भिन्दो भिहतस्य कम्पः   रेङा
प्रश्लिष्ट ऊत्वात्कथितोऽत्र नित्यः
आतोच्यते सौ क्वचिदेष ओङः

एङ्रूप नित्यौ स्त उदात्तकम्पा-
वित्थं कृतः कम्पविनिर्णयश्च

इति कम्पविनिर्णयः समाप्तः ॥

स्वरोत्तरोष्मरायपि पूर्वरेफ-
लकारयोश्च स्वरभक्तिसंज्ञा
स्यादर्धमात्रारलयोस्तदादा-
वन्ते स्वरांशावणुमात्रयुक्तौ

चतुर्भिरणुभिर्मात्रा परिमाणमितिस्मृतम् इति
इन्द्रियाविषयो यो सा वणुरित्युच्यते बुधैः
रलौ तु यस्मात्स्वरपादयुक्तौ
तस्मात्तयोश्च स्वरभक्तिसंज्ञा
पूर्वांशपादद्वययुग्घलन्ता-
स्यात्संवृताख्याहपरे तु भक्तिः
परांशयुक्ता शषसेषु भक्तिः
परेष्वजन्ता विवृताभिधाना
स्वरात्मकेन पादेन ह्युत्तरेणोत्तरं तथा
पूर्वस्वराल्पकत्वम् -- त्वमुत्वं
त्रयं विसृज्यैव वदेत् कि --
करेणुसंज्ञारहयोश्च योगे
सा कर्विणीःस्याल्लहकारयोगे
भक्तिस्तु या रेफ सकारयोगे
तां हस्तिनीति प्रवदन्ति केचित्
स्यधूर्षमित्यत्र तु या च भक्तिः
सेयं स्वतन्त्रा स्वरभक्तिरुक्ता

सा हारिता स्याल्लशयोस्तथैव
क्रमेण सप्तस्वर भक्तयस्ताः

उदाहरिष्ये स्वरभक्तयस्ताः
क्रमात्करेणवादि च हारितान्तम्
बर्हिर्यजत्यर्हति गार्हपत्यं
करेणुमल्हा इति कर्विणी स्यात्

सहर्षभा हंसपदा सुवर्षा
दर्शश्च पर्शुर्हरिणी च बर्सम्

दीर्घाच्च ह्रस्वात्स्वरितादनन्त्यात्
पृथग्भवेद्भक्तिरसांहिता च
पृथक्स्वरं यो भजतीह वर्णः
पृथक् च भक्तिर्निहतेनहोर्ध्वे
अत्रो भयोश्च स्वरयोर्सन्धिः
विवृत्तिरित्युच्यत एव तज्ज्ञैः
क्रमेण वत्सानुसृतिश्च वत्सा-
नुसारिणी पाकवती पिपीलिका

वैशेषिका चोभयदीर्घिका च
स्यान्मध्यमा चैव सवर्णता च
इत्येवमष्टौ हि विवृत्तिसंज्ञा-
स्तासां स्वरूपं खलु वक्ष्यतेऽत्र

या ह्रस्वपूर्वोत्तर दीर्घिका स्यात्
सातर्हिवत्सानुसृतिः समात्रा
ह्रस्वोत्तरा यत्र तु दीर्घपूर्वा
वत्सानुसारिण्यपि सैकमात्रा
यस्याविवृत्तेरुभयत्र ह्रस्वः
पादोनुमात्रा खलु पाकवत्याम्
क्रमेण पूर्वोत्तरयोश्च दीर्घौ
स्त उच्चनीचौ पदकाल एव
विसर्जनीयश्च न यत्र दृश्यते
यस्यां च सन्धौ स्वरितं च लभ्यते

सवर्णभूतावपि तौ भवेतां
सा पादमात्रा च पिपीलिका स्यात्

स्यातां विवृत्तेरपि यत्र यस्याः
आद्यन्तयोश्चाप्यसवर्णदीर्घौ
मध्ये विसर्गो यदिवापि मावा
वैशेषिका मात्रिक कालयुक्ता

आद्यन्तयोश्चैव सवर्णदीर्घौ
स्वरोनसन्धानपदे विसर्गः
एवं गुणा यत्र भवन्ति यस्याः
स्यादेकमात्रोभयदीर्घिका सा

सवर्णदीर्घावुभयत्र यस्या
उदात्तनीचौ भवतः क्रमेण
यद्यस्ति चेत्तत्र विसर्जनीय
स्वारोऽपि सन्धौ च समात्र मध्यमा

आदौ तथान्ते च सवर्णदीर्घौ
विभज्यमाने सविसर्जनीयः
नात्र जातुस्वरितश्च स
तस्याः स मात्राहि सवर्णदीर्घौ

यद्वाक्ति मध्ये त्वनुनासिकः स्यात्
तत्रानुनास्यस्तु सपादमात्रः
साव्यक्तिरप्यत्र सपादमात्राः
पूर्वोक्तमेवात्र च नाम तस्याः
उदाहरिष्यत्यधुना विवृत्तयो
वत्सानुसृत्यादि सवर्णतान्तम्
त आवहन्ति प्रतरान्न आयुः
स आयुवत्सानुसृतिस्त एनम्

ते अस्य यो वा अयधा च वत्सा-

नुसारिणी वा इयमग्र आसीत्
स इञ्जनेन प्र उगां न इन्द्रा-
यां होमुचे पाकवतीम इन्द्रः
वा आदि वा आह्रियमाणरणचे
ते एनमभ्यत्र पिपीलिका स्यात्
ता एव सो एव तथा च कक्षी
वां औ शिवैशेषिकसंज्ञिकाः स्युः
वा आपते एव तथैव तस्याः
आवृश्चयभो ओं भयदीर्घिका स्यात्
भवन्ति वा आग्रयणाग्रवेद्या
आदंश्च या आविविमध्यमाः स्युः
वा आशता आस च आप्रिदिव्या
आपस्तु ता आहुरवर्णदीर्घौ
यशोममा चैव सुमङ्गलासु
श्लोको पहूता च तथैव यद्घ्रात्
रङ्गे मुखे व्याघ्ररुतोपमं स्यात्
मात्राद्वयं ह्ञनितं त्वनास्यम्
नादः सकम्पः स तु मूर्धजातः

नासिक्य रन्ध्र द्वय निस्त्रुतोन्त्ये
स्यादेकमात्रः स तु काकली स्यात्
मन्द्रं पठेन्नित्यमुरस्स्थितेन
स्वरेण शार्दूल रुतोपमेन
सौराष्ट्रिकागोपवधूः सुकण्ठ-
स्वरेण तक्रार्ल इति भाषते यथा
तथा सभुच्चार्य वदेत्स्वकाला-
द्रङ्गश्च कम्पः खलु वर्धते सः

देवा उता इम्यं मृवा अमस्वा
अहं कठे स्युः खलु रङ्गदीर्घाः

ज्ञघ्नः शान्तिः सरूपोर्ध्वो मन्योपस्प्रेदहं पुनः
इम्रवाहः परे न स्यादनुस्वारोऽत्र केवलः  इति

भद्रं च सह संज्ञानं लोकस्तुभ्यमिति क्रमात्
एते काठकसंज्ञाः स्युः पञ्चप्रश्ना न चेतरे

एते द्विमात्राश्च सपादमात्र-
नासिक्ययुक्ताश्च विवृत्तिपूर्वात्
सपादमात्रत्रितये हृदिस्या-
देकस्ततो मूर्धनि चार्धमात्रः

भवेद्विशेषो मुखनासिके च
व्यक्तेश्च तस्मा अपि साणुमात्रः

इति प्रथमपरिच्छेदः समाप्तः

अच्पूर्वकं व्यञ्जनमेति हल्परे
स्पर्शो द्विवर्णं लवकारपूर्वः
परं च हल्यत्स्वरपूर्वरेफाद्
द्वित्वं परे तत्सतिवर्णमात्रे
द्विवर्णमाप्नोति पदान्तवर्ती
ङो नस्वरोर्ध्वोऽपि च ह्रस्वपूर्वः
यजुष्यनुस्वार इहापि यत्र
भवेत्तदाद्यर्धगाकारयुक्तः
सरूपशान्तिः शपरो यदि स्यात्
नस्याद्गकारस्य तु केवलाख्यः

ह्रस्वानुस्वार इयाद्विवर्णं
योगे परे तस्य च मात्रिकः स्यात्
योगादिरप्यत्र तथा द्विरुच्यते
ऽनुस्वारपूर्वोऽप्यथचागमः स्यात्

यद्व्यञ्जनं येन निमित्तकेन
द्विवर्णमाप्नोत्यधुनैव तेन
पूर्वागमो ह्यत्र भवेद्द्वितीय-
चतुर्थयोश्चैव यथाक्रमेण

धामातिभूते परमोपसर्गपा-
य एष आत्पूर्ध्वगताश्छखीभुजाः
एते त्रयस्विक् प्रथमं तृतीयं
पूर्वागमं प्राप्नुयुरेव धाम  इति

क्वचित्समाने स्वरयोस्तु मध्ये
लक्ष्यानुसारद्वितयं हलःस्यात्
पदे द्वितीयस्य तुरीयस्य
पूर्वागमः स्याद्धि तथैव लक्ष्यात्

शात्तैत्तिरीये खलु नस्य ञ स्या-
दादेश एवात्र न काठके ञः
हान्योष्मणः स्पर्शपरात्परस्त-
त्स्पर्शस्य संस्थान इहागमः स्यात्
सकृच्च वर्ग प्रथमः सचाभि-
निधीयतेऽत्राभिनिधान उच्यते

स्पर्शाद्यदोष्मा विकृतेरनुत्तमात्
स्यादुत्तमोर्ध्वे सति चानुपूर्व्यात्
नासिक्यसंज्ञा इह चागमाः स्युः
एतान् यमानेव वदन्ति केचित्

वर्गान्तं शषसैः सार्थमन्तस्थाभिश्च संयुतम्
दृष्ट्वा यमा निवर्तन्ते अत्यन्तं सूक्ष्ममुच्यते

ऊष्मप्रकृतिकात्स्पर्शात् पञ्चमः परतो यदि

तत्रैव यमापत्तिरिष्यते नात्र संशयः इति

पदान्तगोव्याप्यपदान्तवर्त्ति-
द्वितीयवर्णे प्रथमो श्रुतेस्म
सषौ परौ चेदपदान्तवर्तिनौ
द्वितीयकत्वं प्रथमस्य द्वो --

ह्रस्वात्परो नाद इह द्विरूप
वर्णक्रमे तं सकृदुच्चरेज्ज्ञः
द्वित्वं निवर्तेत यदा प्रसक्तौ
पूर्वागमो तदुच्यतेऽत्र
ईदैदयो यश्च विसर्गरेफा-
वूष्मास्वरे वा प्रथमोत्तरे च
स्वरे परे वश्च लकार ऊष्म
विसर्गोत्तरस्योभद्विरूप्यम्

स्पर्शोत्तरश्चेद्यवलोत्तरोम
स्तस्येतितेषामनुनासिकं च
शषसेष्वच्परेष्वत्र विसर्गो यत्र दृश्यते
हकारान्नणमा यत्र दृश्यन्ते परतस्तदा
नासिक्यत्वमुरस्यत्वं हस्य तत्र द्विरुच्यते

विवृत्तिमध्ये यत्र स्याद्विसर्गः सोऽर्धमात्रिकः
विरामश्चैकमात्रः स्यात्तस्य संज्ञा यथा विधि

हरिप्रणवयोर्मध्ये वर्णक्रमविनिर्णितः
विसर्गसार्धमात्रत्वं विरामो मात्रिको भवेत्

प्राग्यद्यघोषवर्णाभ्यां विसर्गः कः परे
क्रमात्सजिह्वामूलीयोपध्मानीयौ उच्यते

केवलवर्णक्रमलक्षणं समाप्तम्

शुद्ध वर्णे त्वचामादौ यद्युच्चादिःप्रयुज्यते
संविद्यात्स्वरवर्णं तदेतदेवास्य लक्षणम्

वर्णे च स्वरमात्राङ्गवर्णसारेषु नित्यशः
कारोत्तरस्वरेभ्योऽर्वाङ् न च संधिः कदा चन

उदात्तादिस्वरात् पूर्वं स्वरवर्णे च मातृका
यदि युज्येत नाम्नासौ मातृकावर्ण उच्यते

तस्मिंस्तु मातृकात् पूर्वमचां संज्ञोच्यते यदि
हलामादावङ्गसंज्ञा नामान्यस्याङ्गवर्णकः

यत्र यत्र व्यञ्जनानां पौर्वापर्यविधानतः
यथाङ्गलक्षणं प्रोक्तमङ्गवर्णे तथा वदेत्

व्यञ्जनानामङ्गवर्णे त्वङ्गं भूतोत्तरं वदेत्
हल्संज्ञिकेति कण्ठोक्त्या वदेत् तन्नाम वै ततः

आदौ स्वराणामच्संज्ञा तत्तन्मात्रा वदेत् ततः
अथ स्वरानुदात्तादीन् तन्नाम च वदेत् क्रमात्

व्यञ्जनं यद्यवसितं तस्य मात्रा विधीयते
यत्रानवसितं तत् स्यात् तन्मात्रा तत्र नेष्यते

अनेकवर्णसंयोगो यत्रैकव्यञ्जनात्मकः
स्यात्पूर्वाङ्गो भवेत् तत्र पूर्वाङ्गादि सकृद् वदेत्

एकव्यञ्जनसंयोग उभयाङ्गो भवेद्यदि
पृथगङ्गं प्रयुञ्जीयात् पौर्वापर्यक्रमात् तदा

यदुक्तं केवले वर्णे शास्त्रादि द्वित्वागमादिकम्
तत् सर्वमङ्गवर्णोक्तौ प्रयुञ्जीयाद्यथाविधि

पारि शिक्षा समाप्ता